# श्री अरुणाचल-

# माहात्म्यसारम् ॥

अथ श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां

प्रथमे माहेश्वरखण्डे अरुणाचलमाहात्म्ये

शिवेनाऽरुणाचलस्य सर्वश्रैष्ठ्यवरप्रदानवर्णनम् ।

## ध्यान-श्लोकः

नीलारविन्दसुहृदा सदृशं प्रसादे

तुल्यं तथा महसि तोयजबान्धवेन ।

ब्राह्म्यां स्थितौ तु पितरं वटमूलवासं

संस्मारयन्तमचलन्तमनूदितं मे ॥

## १ स्वरूप-माहात्म्यम् ।

अहं हि तैजसं रूपमास्थाय वसुधातले ।

वसामि चाऽत्र सिद्ध्यर्थमरुणाचलसञ्ज्ञया ॥

अयं सदाशिवः साक्षादरुणाचलरूपतः ।
दृश्यते परमं तेजः सर्गस्थित्यन्तकारणम् ॥
अरुणाचलरूपेण तिष्ठामि वसुधातले ।
तस्य दर्शनमात्रेण भविता ते तमःक्षयः ॥
अग्नितेजोमयं रूपमादिमध्यान्तवर्जितम् ।
सम्प्राप्य तस्थौ तन्मध्ये दिशोदशविभासयन् ॥
एतत्तु तैजसं लिङ्गं सर्वदेवनमस्कृतम् ।
दृश्यते कर्मभूरेषा तेन धर्माधिका मता ॥
तत्र ते दर्शयिष्यामि तैजसं रूपमात्मनः ।
सर्वपापनिवृत्यर्थं सर्वलोकहिताय च ॥

## २ स्मरणमाहात्म्यम्

नामस्मरणमात्रेण यत्पातकविनाशनम् ।
शिवसारूप्यदं नित्यं मह्यं वद दयानिधे ॥

स्मरणेन मनःश्रोत्रे श्रवणाद्दर्शनाद्दृशोः ।
जिह्वाञ्च कीर्तनाच्छोणक्षेत्रं सद्यः पुनात्यलम् ॥
अस्मिन्स्मरणमात्रेण तारतम्यं विचिन्त्यताम् ।
यद्गङ्गायां प्रयागे यत्काश्यां वै पुष्करेषु यत् ॥
चराचराणां भूतानां जानतामप्यजानताम् ।
यस्य स्मरणमात्रेण मुक्तिस्तद्वद देशिक ॥
लेभे च परमं स्थानमप्राप्यममरैरपि ।
भरतो मृगशावस्य स्मरणादायुषोऽत्यये ॥
अबनतजनरक्षणोचितस्य
स्मरणनिराकृतविश्वकल्मषस्य ।
भजनममितपुण्यराशियोगा\-
दरुणगिरेः कृतिनः परं लभस्व ॥

## ३ दर्शन-माहात्म्यम्

दृष्ट्वा समस्तैर्दुरितैर्मुच्यन्तां सर्वजन्तवः ।
तथेति देवदेवेन प्रोचेऽथाऽन्तर्दधे गिरौ ॥

विनश्यति क्षणात्सर्वमरुणाचलदर्शनात् ।

प्रदक्षिणानमस्कारैः स्मरणैरर्चनैः स्तवैः ॥

नक्षत्रे कृत्तिकाख्येऽस्मिंस्तेजस्ते दृश्यतां परम् ।

तद्दीक्षितमिदं तेजः परमं प्रतिवत्सरम् ॥

ऋणद्धि सर्वलोकेभ्यः परुषं पापसञ्चयम् ।

ऋणो न विद्यते यस्मिन्दृष्टे तेनाऽरुणाचलः ॥

नृणां च दर्शनाद्दूरे कैवल्यं स्मरणेन वा ।

अस्तु वेदान्तविज्ञानं न साध्यं निष्प्रयासतः ॥

# ४ प्रदक्षिणा-माहात्म्यम्

मत्प्रदक्षिणाकर्तॄणां जायन्ते सततं शुभाः ।

प्रच्छिनत्ति प्रकारोऽघं दकारो वाञ्छितप्रदः ॥

क्षिकारात्क्षीयते कर्म णकारो मुक्तिदायकः ।

दुर्बलाः कार्श्यसंयुक्ता आधिव्याधिविजृम्भिताः ॥

एष दूरात्प्रणामेन निकर्षाच्च प्रदक्षिणात् ।
अपि पापात्मनां पुंसामस्तु निःश्रेयसप्रदः ॥

# ५ स्थल-माहात्म्यम्

किमन्यद्वद वत्सेति उद्धृत्य भुजमुच्यते ।
अरुणक्षेत्रतो नाऽन्यदलं स्वर्गापवर्गयोः ॥
एष दक्षिणकैलासो योऽसावरुणपर्वतः ।
अन्येषु सिद्धक्षेत्रेषु तपोभिः सिद्धयो नृणाम् ॥
योजनत्रयविस्तीर्णमुपास्यं शिवयोगिभिः ।
तद्भूमेर्हृदयं विद्धि शिवस्य हृदयङ्गमम् ॥
अस्ति दक्षिणदिग्भागे द्राविडेषु तपोधनम् ।
अरुणाख्यं महाक्षेत्रं तरुणेन्दुशिखामणेः ॥
आगस्त्यं दक्षिणे भागे तीर्थं महदुदाहृतम् ।
सर्वभाषार्थसंसिद्धिर्जायते तत्र मञ्जता ॥

वसिष्ठमुत्तरे भागे तीर्थं दिव्यं शुभोदयम् ।
सर्ववेदार्थसंसिद्धिर्जायते तत्र मज्जनात् ॥

## ६ स्तव-माहात्म्यम्

सर्ववेदस्वरूपाय नित्यायामृतमूर्तये ।
कालाय करुणार्द्राय दृष्टिपेयामृताब्धये ॥

इति वेदाः स्तुवन्ति त्वामरुणाद्रीश ! सन्ततम् ।
नमस्ताम्राय चारुणाय शिवाय परमात्मने ॥

अरुणाचलमाहात्म्यं ब्रह्मणामपि कोटिभिः ।
ब्रह्मणा विष्णुना पूर्वं सोमभास्करवह्निभिः ॥

अरुणाद्रिमयं लिङ्गमाविर्भूतं यथा पुरा ।
न शक्यते पुनर्वक्तुमशेषं वक्त्रकोटिभिः ॥

कीर्तितोऽपि जनैर्दूरैः शोणाद्रिरिति मुक्तिदः ।
तेजःस्तम्भमयं रूपमरुणाद्रिरितिश्रुतम् ॥

खगैश्च मुनिभिर्दिव्यैः सिद्धयोगिभिरर्चितः ।
तत्तत्पापनिवृत्यर्थं तत्तदीप्सितसिद्धये ॥
अरुणाद्रिरयं नृणां सर्वकल्मषनाशनम् ।
कैलासे मेरुशृङ्गे वा स्वस्थानेषु कलाद्रिषु ॥
नास्ति वैराग्यतः सौख्यं नास्ति मुक्तेः परं पदम् ।
नारुणाद्रेः समो मेरुर्न कैलासो न मन्दरः ॥
अक्षयं भवति प्राप्तमरुणाचलसन्निधौ ।
पुरा ब्रह्मा च विष्णुश्च शिवतेजोंऽशसम्भवौ ॥
साहङ्कारौ युयुधतुः परस्परजिगीषया ।
तथा तयोर्गर्वशान्त्यै योगिध्येयः सदाशिवः ॥

## ७ फल-माहात्म्यम्

अरुणेऽस्मिन्महाक्षेत्रे देहिभिर्लब्धजन्मभिः ।
जीवद्भिर्लभ्यते भोगो मोक्षश्चोन्मुक्तजीवितैः ॥

ध्यायन्तो योगिनश्चित्ते शिवसायुज्यमाप्नुयुः ।

दत्तं हुतञ्च यत्किञ्चिज्जप्तं चाऽन्यत्तपः कृतम् ॥

यस्यानुग्रहमिच्छामि जन्तोस्तस्याऽत्रसम्भवः ।

देहान्ते कल्पतां मुक्त्यै विनौपनिषदीगिरः ॥

सकृत्सङ्कीर्तिते नाम्नि शोणाद्रिरिति मुक्तिदे ।

सन्निधिः सर्वकामानां जायते चाघनाशनम् ॥

भजस्व तैजसं लिङ्गं सर्वदोषनिवृत्तये ।

वाचिकं मानसं पापं कायिकं वा च यद्भवेत् ॥

इदमनुभववैभवं विचित्रं

दुरितहरं शिवलिङ्गमद्रिरूपम् ।

अमलमनभिगम्यनामधेयं

वरमरुणाद्रिनायकं भजस्व ॥

|| ॐ नमो भगवते श्री अरुणाचल रमणाय नमो नमः ||